॥ श्रीमद्भगवद्गीताष्टोत्तरम् ॥

ॐ श्रीमद्भगवद्गीतायै नमः ।
ॐ श्रीकृष्णामृतवाण्यै नमः ।
ॐ पार्थाय प्रतिबोधितायै नमः ।
ॐ व्यासेन ग्रथितायै नमः ।
ॐ सञ्जयवर्णितायै नमः ।
ॐ महाभारतमध्यस्थितायै नमः ।
ॐ कुरुक्षेत्रे उपदिष्टायै नमः ।
ॐ भगवत्यै नमः ।
ॐ अम्बारूपायै नमः ।
ॐ अद्वैतामृतवर्षिण्यै नमः । १०।
ॐ भवद्वेषिण्यै नमः ।
ॐ अष्टादशाध्याय्यै नमः ।
ॐ सर्वोपनिषत्सारायै नमः ।
ॐ ब्रह्मविद्यायै नमः ।
ॐ योगशास्त्ररूपायै नमः ।
ॐ श्रीकृष्णार्जुनसंवादरूपायै नमः ।
ॐ श्रीकृष्णहृदयायै नमः ।
ॐ सुन्दर्यै नमः ।
ॐ मधुरायै नमः ।
ॐ पुनीतायै नमः । २०।
ॐ कर्ममर्मप्रकाशिन्यै नमः ।
ॐ कामासक्तिहरायै नमः ।
ॐ तत्त्वज्ञानप्रकाशिन्यै नमः ।
ॐ निश्चलभक्तिविधायिन्यै नमः ।
ॐ निर्मलायै नमः ।
ॐ कलिमलहारिण्यै नमः ।
ॐ रागद्वेषविदारिण्यै नमः ।
ॐ मोदकारिण्यै नमः ।
ॐ भवभयहारिण्यै नमः ।
ॐ तारिण्यै नमः । ३०।
ॐ परमानन्दप्रदायै नमः ।
ॐ अज्ञाननाशिन्यै नमः ।
ॐ आसुरभावविनाशिन्यै नमः ।
ॐ दैवीसम्पत्प्रदायै नमः ।
ॐ हरिभक्तप्रियायै नमः ।
ॐ सर्वशास्त्रस्वामिन्यै नमः ।

ॐ दयासुधावर्षिण्यै नमः ।
ॐ हरिपदप्रेमप्रदायिन्यै नमः ।
ॐ श्रीप्रदायै नमः ।
ॐ विजयप्रदायै नमः । ४०।
ॐ भूतिदायै नमः ।
ॐ नीतिदायै नमः ।
ॐ सनातन्यै नमः ।
ॐ सर्वधर्मस्वरूपिण्यै नमः ।
ॐ समस्तसिद्धिदायै नमः ।
ॐ सन्मार्गदर्शिकायै नमः ।
ॐ त्रिलोकीपूज्यायै नमः ।
ॐ अर्जुनविषादहारिण्यै नमः ।
ॐ प्रसादप्रदायै नमः ।
ॐ नित्यात्मस्वरूपदर्शिकायै नमः । ५०।
ॐ अनित्यदेहसंसाररूपदर्शिकायै नमः ।
ॐ पुनर्जन्मरहस्यप्रकटिकायै नमः ।
ॐ स्वधर्मप्रबोधिन्यै नमः ।
ॐ स्थितप्रज्ञलक्षणदर्शिकायै नमः ।
ॐ कर्मयोगप्रकाशिकायै नमः ।
ॐ यज्ञभावनाप्रकाशिन्यै नमः ।
ॐ विविधयज्ञप्रदर्शिकायै नमः ।
ॐ चित्तशुद्धिदायै नमः ।
ॐ कामनाशोपायबोधिकायै नमः ।
ॐ अवतारतत्त्वविचारिण्यै नमः । ६०।
ॐ ज्ञानप्राप्तिसाधनोपदेशिकायै नमः ।
ॐ ध्यानयोगबोधिन्यै नमः ।
ॐ मनोनिग्रहमार्गप्रदीपिकायै नमः ।
ॐ सर्वविधसाधकहितकारिण्यै नमः ।
ॐ ज्ञानविज्ञानप्रकाशिकायै नमः ।
ॐ परापरप्रकृतिबोधिकायै नमः ।
ॐ सृष्टिरहस्यप्रकटिकायै नमः ।
ॐ चतुर्विधभक्तलक्षणदर्शिकायै नमः ।
ॐ भुक्तिमुक्तिदायै नमः ।
ॐ जीवजगदीश्वरस्वरूपबोधिकायै नमः । ७०।
ॐ प्रणवध्यानोपदेशिकायै नमः ।
ॐ कर्मोपासनफलदर्शिकायै नमः ।
ॐ राजविद्यायै नमः ।
ॐ राजगुह्यायै नमः ।

ॐ प्रत्यक्षावगमायै नमः ।
ॐ धर्म्यायै नमः ।
ॐ सुलभायै नमः ।
ॐ योगक्षेमकारिण्यै नमः ।
ॐ भगवद्विभूतिविस्तारिकायै नमः ।
ॐ विश्वरूपदर्शनयोगयुक्तायै नमः । ८०।
ॐ भगवदैश्वर्यप्रदर्शिकायै नमः ।
ॐ भक्तिदायै नमः ।
ॐ भक्तिविवर्धिन्यै नमः ।
ॐ भक्तलक्षणबोधिकायै नमः ।
ॐ सगुणनिर्गुणप्रकाशिन्यै नमः ।
ॐ क्षेत्रक्षेत्रज्ञविवेककारिण्यै नमः ।
ॐ दृढवैराग्यकारिण्यै नमः ।
ॐ गुणत्रयविभागदर्शिकायै नमः ।
ॐ गुणातीतपुरुषलक्षणदर्शिकायै नमः ।
ॐ अश्वत्थवृक्षवर्णनकारिण्यै नमः । ९०।
ॐ संसारवृक्षच्छेदनोपायबोधिन्यै नमः ।
ॐ त्रिविधश्रद्धास्वरूपप्रकाशिकायै नमः ।
ॐ त्यागसंन्यासतत्त्वदर्शिकायै नमः९३।
ॐ यज्ञदानतपःस्वरूपबोधिन्यै नमः ।
ॐ ज्ञानकर्मकर्तृस्वरूपबोधिकायै नमः ।
ॐ शरणागतिरहस्यप्रदर्शिकायै नमः ।
ॐ आश्चर्यरूपायै नमः ।
ॐ विस्मयकारिण्यै नमः ।
ॐ आह्लादकारिण्यै नमः ।
ॐ भक्तिहीनजनागम्यायै नमः । १००।
ॐ जगत उद्धारिण्यै नमः ।
ॐ दिव्यदृष्टिप्रदायै नमः ।
ॐ धर्मसंस्थापिकायै नमः ।
ॐ भक्तजनसेव्यायै नमः ।
ॐ सर्वदेवस्तुतायै नमः ।
ॐ ज्ञानगङ्गायै नमः ।
ॐ श्रीकृष्णप्रियतमायै नमः ।
ॐ सर्वमङ्गलायै नमः । १०८।
॥ इति स्वामीतेजोमयानन्दरचिता
श्रीमद्भगवद्गीताष्टोत्तरशतनामावली ॥